देशान्तरस्थचेतोभिरेसद्गात्मगृहस्थितैः।
अप्रौढमतिभिः साधुमूर्खैरप्यनुभूयते ॥ ८०

सङ्गः कारणमर्थानां सङ्गः संसारकारणम्।
सङ्गः कारणमाशानां सङ्गः कारणमापदाम् ॥ ८१

सङ्गत्यागं विदुर्मोक्षं सङ्गत्यागादजन्मता।
सङ्गं त्यज त्वं भावानां जीवन्मुक्तो भवानघ ॥ ८२

श्रीराम उवाच।

सर्वसंशयनीहारशरन्मारुत हे मुने।
सङ्गः किमुच्यते ब्रूहि समासेन मम प्रभो ॥ ८३

वसिष्ठ उवाच।

भावाभावे पदार्थानां हर्षामर्षविकारता।
मलिना वासना यैषा सा सङ्ग इति कथ्यते ॥ ८४

जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी।
मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना ॥ ८५

तामसङ्गाभिधां विद्धि यावद्देहं च भाविनी।
तया यत्क्रियते कर्म न तद्बन्धाय वै पुनः ॥ ८६

अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम्।
युक्ता हर्षविषादाभ्यां बन्धनी वासना भवेत् ॥ ८७

सैवोक्ता सङ्गशब्देन पुनर्जननकारिणी।
तया यत्क्रियते कर्म तद्बन्धायैव केवलम् ॥ ८८

एवं रूपं परित्यज्य सङ्गं स्वात्माविकारदम्।
यदि तिष्ठसि निर्व्यग्रः कुर्वन्नपि न लिप्यसे ॥ ८९

हर्षामर्षविषादाभ्यां यदि गच्छसि नान्यताम्।
वीतरागभयक्रोधस्तदसङ्गोऽसि राघव ॥ ९०

दुःखैर्न ग्लानिमायासि यदि हृष्यसि नो सुखैः।
आशावैवश्यमुत्सृज्य तदसङ्गोऽसि राघव ॥ ९१

विहरन्व्यवहारेषु सुखदुःखदशासु च।
न विमुञ्चसि सत्साम्यं तदसङ्गोऽसि राघव ॥ ९२

संवेद्यो यदि चैवात्मा वेदिते लक्ष्यते समः।
यथाप्राप्तानुवर्ती च तदसङ्गोऽसि राघव ॥ ९३

असङ्गतामनायासाज्जीवन्मुक्तस्थितिं स्थिराम्।
अवलम्ब्य समः स्वस्थो वीतरागो भवानघ ॥ ९४

जीवन्मुक्तमतिर्मौनी निगृहीतेन्द्रियग्रहः।
अमानमदमात्सर्यमार्यस्तिष्ठति विज्वरम् ॥ ९५

सदा समग्रेऽपि हि वस्तुजाले
समाशयोऽप्यन्तरदीनसत्वः।
व्यापारमात्रात्सहजात्क्रमस्था-
न्न किंचिदप्यन्यदसौ करोति ॥ ९६

यदेव किंचित्प्रकृतं क्रमस्थं
कर्तव्यमात्मीयमसौ तदेव।
संसर्गसंबन्धविहीनयैव
कुर्वन्न खेदं रमते धियान्तः ॥ ९७

अथापदं प्राप्य सुसंपदं वा
महामतिः स्वप्रकृतं स्वभावम्।
जहाति नो मन्दरवेल्लितोऽपि
शौक्ल्यं यथा क्षीरमयाम्बुराशिः ॥ ९८

संप्राप्य साम्राज्यमथापदं वा
सरीसृपत्वं सुरनाथतां वा।
तिष्ठत्यखेदोदयमस्तहर्षं
क्षयोदयेष्विन्दुरिवैकरूपः ॥ ९९

---

॥ ७९ ॥ एतत्पश्यतोऽप्यदर्शनादिदेशान्तरस्थचेतोभिरन्यत्र गतमानसैरात्मनः स्वस्य गृहे स्थितैर्मूर्खैः पामरैरप्रौढमतिभिर्बालपश्वादिभिश्चासाधु सम्यगनुभूयत इति नात्र विवाद इत्यर्थः ॥८०॥ तथाच संसक्तिपूर्वकं पदार्थदर्शनमेव बन्धहेतुर्नासंसक्तचित्तस्येत्याशयेनाह—सङ्ग इति ॥८१॥ मोक्षं वर्तमानदेहादिसंबन्धनिवृत्तिम्। अजन्मता भाविदेहादिबन्धनिवारणमिति भेदः ॥ ८२ ॥ किमिति सामान्ये नपुंसकम्। प्रश्नः स्पष्टः ॥ ८३ ॥ इष्टानिष्टपदार्थानां भावाभावे संयोगे वियोगे च हर्षामर्षविकारदा रागादिवासनैव सङ्ग इति कथ्यते इत्यर्थः ॥८४॥ ॥ ८५ ॥ यावद्देहं प्रारब्धशेषक्षयपर्यन्तम् ॥ ८६ ॥ ८७॥ ॥ ८८ ॥ निर्व्यग्रः स्वस्थः ॥ ८९ ॥ समाहारद्वन्द्वगर्भेतरेतरयोगद्वन्द्वविवक्षणाद्धर्षामर्षविषादाभ्यामिति द्विवचनम्। अन्यतां वैरूप्यम् ॥ ९० ॥ आशया वैवश्यं पारवश्यम् ॥ ९१ ॥ सत्साम्यं ब्रह्मैकरस्यं न विमुञ्चसि यदीत्यनुषङ्गः ॥ ९२ ॥ आत्मा चित्तस्वभावः ॥ ९३ ॥ ९४ ॥ निगृहीताः इन्द्रियलक्षणा गृह्णन्तीति ग्रहाः पाशा येन ॥ ९५ ॥ भोगविक्षेपादिहेतौ वस्तुजाले सदा समग्रे प्रचुरतरे सत्यपि समाशयः। अन्तर्बहिरप्यदीनं स्पृहा याञ्चादिदैन्यवर्जितं सत्वं यस्य। स्ववर्णाश्रमोचितसहजक्रमस्थाद्व्यापारमात्रादन्यत्किंचिदप्यसौ न करोति ॥ ९६ ॥ संसर्गः क्रियाभिनिवेशः संबन्धः फलाभिलाषस्तद्विहीनयैव धिया अन्तः स्वात्मनि रमते ॥ ९७ ॥ स्वं स्वीयं प्रकृतं पूर्वसिद्धं शान्तिदान्तिप्रसादसमदर्शनादिस्वभावं नो जहाति। यथा मन्दरेण वेल्लितो मथितोऽपि क्षीरमयाम्बुराशिः सहजं शौक्ल्यं न जहाति तद्वत् ॥ ९८ ॥ आपदं दारिद्रादि। सरीसृपत्वं डुण्डुभादियोनिम्। अखेदोदयं अस्तहर्षं चेति स्थितिक्रियाविशेषणे। क्षयोदयेषु कलनासुपचयापचयकालेषु उदयास्तमयकालेषु वा।

[नि]संरम्भमपास्तभेदं
प्रशान्तनानाफलवल्गुवेषम् ।
विचारयात्मानमदीनसत्त्वो
यथा भवस्युत्तमकार्यनिष्ठः ॥ १००

तयोदितप्रसरविलासशुद्धया
गतज्वरं पदमवलम्बयालम् ।
धियेद्धया पुनरिह जन्मबन्धनै-
र्न बध्यसे समधिगतात्मदृश्यया ॥ १०१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते द्वात्रिंशत्साहस्र्यां संहितायां मोक्षोपायेषु उपशमप्रकरणे समदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

॥९९॥ दर्शितलक्षणजीवन्मुक्तिसुखप्राप्तौ रागद्वेषभेदवासनाक्षयाभ्याससहित आत्मविचार एवोपाय इति तमेव रामायोपदिशन्नुपसंहरति—निरस्तेति । संरम्भः क्रोधः । त्रीण्यपि क्रियाविशेषणानि । यथा येन विचारेण उत्तमकार्यमवश्यसंपाद्यं चरमपुरुषार्थस्तन्निष्ठो भवसि तथा विचारयेत्यर्थः ॥ १०० ॥ तया विचारणया उदितप्रसरस्य समाधेर्विलासेन सर्ववासनाक्षयाच्छुद्धया समाधिगतमात्मरूपं दृश्यमवश्यद्रष्टव्यं वस्तु यया तथाविधया अतएव अविद्यातत्कार्यदाहक्षमतया इद्धया दीप्तया धिया गतज्वरं निर्दुःखनिरतिशयानन्दरूपं परमपदमवलम्ब्य अध्यास्व । तदवलम्बने पुनरावृत्तिशङ्कावारणायाह—पुनरिहेति । तस्मात्तत्त्वसाक्षात्कारेणैवाविद्यातत्कार्यसर्वानर्थोपशमनान्नित्यनिरतिशयानन्दस्वरूपे प्रतिष्ठेति सिद्धम् ॥ १०१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे त्रिनवतितमः सर्गः ॥ ९३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्यश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षोः शिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणं संपूर्णम् ॥

॥ उपशमप्रकरणं संपूर्णम् ॥

